त्रिभुवनगिरिस्वामी श्रीमान् स कर्दमभूपति-
स्तदुप समभूत् शिष्यः श्रीमद्धनेश्वरसञ्ज्ञया ।
अजनि सुगुरुस्तत्पट्टेऽस्मात् प्रभृत्यवनिस्तुतः
तदनु विदितो विश्वे गच्छः स 'राज'पदोत्तरः ॥ ५ ॥

सुगुरुरजितसिंहस्तत्पदाम्भोजभानुः समजनि जनितश्रीर्भव्यपङ्केरुहाणाम् ।
वचनकरवितानं यस्य देदीप्यमानं जडगतमपि सोढुं दुर्दृशोर्न क्षमन्ते ॥ ६ ॥

श्रीवर्द्धमानसुगुरुः कर्कोद्यतधामसद्गतस्तदनु ।
मतसङ्गचारिशरणः समजनि 'जनलग्नदोषहरः ॥ ७ ॥

तत्पट्टभूमिकल्पोपतपाल्यश्रीः' श्रीशीलभद्र' इति सूरिपदं प्रपेदे ।
धर्म्मोपदेशजलवाग्जलैर्यदीयः प्रापोन्नतिं 'जगति कीर्तिलतावितानः ॥ ८ ॥

तदंह्रिसरसीहंसः सूरिः श्रीचन्द्र इत्यभूत् ।
विवेचकः शुचिः सद्गीस्तद्वाचानुपजीवनात्' ॥ ९ ॥

अर्थप्रकाशिका' शास्त्रचक्षुषाममृताञ्जनम् ।
घनसाररसादरा यन्मतिः सुधागरद्गभृत्' ॥ १० ॥

सूरिः श्रीभरतेश्वरस्तदनु च प्रामाणिकग्रामणी-
र्यन्नामस्मृतितोऽप्यघं हरति च श्रीधर्म्मघोष''प्रभुः ।
कल्याणावलिवन्दलालिजलदः श्रीसर्वदेवो गुरु-
श्चत्वारः किल शीलभद्रसुगुरोः शिष्या नरेन्द्रार्चिताः ॥ ११ ॥

श्रीपार्श्वं स जिनेश्वरप्रभुरभूत् सद्धाम्बुधौ चन्द्रमाः
सूरिः श्रीजिनदत्त इत्युदितधीस्त्रिद्रविद्यागुतिः ।
चारित्रामलशीलनन्दनवनं श्रीपद्मदेवप्रभुः
श्रीश्रीचन्द्रमुनीश्वरस्य जयिनः शिष्या अभूवन्नमी ॥ १२ ॥

श्रीसद्गुरोस्तणगराधरधाम्नस्तं श्रीपूर्णभद्रगुरुरभ्युदितः पदेऽस्य ।
यस्तत्रिशिशिम्बिनिभृतो भुवि भव्यमार्या वस्तूनि विश्वविषयाणि विलोकयन्ति ॥१३॥

1 N [illegible] । 2 N [illegible] । 3 N [illegible] । 4 N [illegible]; A [illegible] । 5 N [illegible] । 6 N [illegible] । 7 N [illegible] । 8 N [illegible] । 9 N [illegible] । 10 A [illegible] ।

तत्पट्टोदयपर्वतामृतरुचिः प्रीणंश्चकोरव्रजं
श्रीचन्द्रप्रभसूरिरद्भुतमतिर्ज्योत्स्नानिधानं बभौ ।
आश्चर्यं न कलङ्कधाम तमसानुल्लंघ्यमूर्ति भवं
पाथोधिं क्षणुते[1] विनम्रकमलोल्लासी न दोषाकरः ॥ १४ ॥

आचार्यः श्रीप्रभाचन्द्रस्तत्पादाम्भोजषट्पदः ।
चित्रं यः सुमनःस्थोऽपि सदानघगुरुक्रमः ॥ १५ ॥

श्री हेमचन्द्रसूरीणामनुध्यानप्रवृत्तितः ।
पर्वणः परिशिष्टस्य दृष्टेः[2] सम्पुटवासनः ॥ १६ ॥

श्रीवज्रानुप्रवृत्तप्रकट[3]मुनिपतिप्रष्ठवृत्तानि तत्तद्
ग्रन्थेभ्यः कानिचिच्च श्रुतधरमुखतः कानिचित् सङ्कलय्य ।
दुष्प्रापत्वादमीषां विशकलिततयैकत्र चित्रावदातं
जिज्ञासैकाग्रहाणामधिगतविधयेऽभ्युचयं स प्रतेने ॥ १७ ॥

–निभिर्विशेषकम् ।

अत्र क्षूणं हि यत्किञ्चित् संप्रदायविभेदतः ।
मयि प्रसादमाधाय तच्छोधयत कोविदाः ॥ १८ ॥

यत.–

आराधितं[4] मया शून्यं यथा तुष्टं सतामदात्[5] ।
निजोक्तौ स्थापितं तत् प्राक् कथाकन्थी[6]कृतास्ततः ॥ १९ ॥

रोदोरन्ध्रगसिद्धकिन्नरगणानुल्लंघ्यशृङ्गस्थिति-
स्तुङ्गत्वोदितवृत्तशेवधिरतिप्रौढार्थसंपत्तिकृत् ।
पूतप्रभया तिरस्कृतपरज्योतिःप्रकाशोदयः
श्रीपूर्वर्षिचरित्ररोहणगिरौ स्यादारवीन्दुध्रुवः ॥ २० ॥

1 N सपुटे विनम्रकमले° । 2 N °शिष्टसाहे° । 3 N °वज्रानुप्रभप्रकट° । 4 N आराधितमया° । 5 N स्व(म)तमे(मे)-दात् । 6 A कथाकंठीकृता ।

श्रीप्रद्युम्नगुरोर्हिमांशुविशदो बोधः शुचेः सङ्गतो
मिश्रो रक्तरुचा[1] मम प्रतिपदास्फूर्जद्यशःपूरुषः।
ज्ञानश्रीपुरतः पदार्थघटनाविम्बद्वयोट्टङ्कनात्
जातो ग्रन्थमिषेण साक्षरशुचिर्द्रम्मश्चिरं नन्दतु ॥ २१ ॥

वेदानल-शिखि-शशधर ( १३३४ ) वर्षे चैत्रस्य धवलसप्तम्याम्।
शुक्रे पुनर्वसुदिने सम्पूर्णं पूर्वऋषिचरितम्[2] ॥ २२ ॥

शिक्षाप्रसादवशतः स्वगुरोर्मयैनमायासमत्र दधता यदवापि पुण्यम्।
व्याख्यानसक्तमनसः श्रवणादराश्च श्रेयस्सुसङ्गममनुत्तरमवाप्नुवन्तु ॥ २३ ॥

ग्रन्थस्य मानमस्य प्रत्यक्षरगणनया सुनिर्णीतम्।
पञ्चसहस्राः सप्त च शतानि चतुरधिकसप्ततियुतानि* ॥ २४ ॥

। †प्रशस्ति श्लोक ४०, उभयं ५७७४, शिवमस्तु ।

---

1 D मिश्रोरक्तरुचा, N मिश्रो(चारु)रुचा। 2 A पूर्वर्षिचरितम्। * B चतुरशीति अधिकमिद। † B आदर्शे मात्रीय समस्ताऽपि ग्रन्थप्रशस्ता स्वकीया प्रशस्ति ।

# परिशिष्टद्वयम्



१. प्रभावकचरित्रान्तर्गत-समुद्धृतपद्यानामकाराद्यनुक्रमणिका ।



२. प्रभावकचरित्रान्तर्गत-विशेषनाम्नामकाराद्यनुक्रमणिका ।

## १. परिशिष्टम् ।

### प्रभावकचरित्रान्तर्गतसमुद्धृतपद्यानां

# अकाराद्यनुक्रमणिका ।

